रदः ॥ वशीकृतेंद्रियग्रामो वासुदेवपरायणः ॥ २१॥
देवस्य शार्ङ्गिणः पार्श्वे गीताध्यायमिमं प्रिये ॥ एकाद
शं पठत्येव विश्वरूपप्रदर्शनम् ॥ २२॥ अध्यायस्य प्रभा
वेन ब्रह्मज्ञानमवापसः ॥ स्फुनंदस्मिद्धनोल्लासविस्फु
रद्रूपवैभवः ॥ २३ ॥ परमानंदसंदोहलाध्यसंवित्स
माधिना ॥ प्रत्यक्षुरवेंद्रियव्रातनिश्चलास्थितिमीयु
षा ॥ २४ ॥ सततंस्थीयते तेन जीवन्मुक्तेन योगिना ॥
योगाभ्यासरतेनाथ वासुदेवपरेण च ॥ २५ ॥ एकदा
स महायोगी सिंहराशिस्थिते गुरौ ॥ गोदावरीतीर्थ
यात्रां विधातुमुपचक्रमे ॥ २६ ॥ स्नात्वा मेखलतीर्थे स
नत्वा देवजनार्दनम् ॥ प्रतस्थे गौतमीतीरे सहायैरपरै
र्वृतः ॥ २७ ॥ प्रथमे हि समागत्य विरजं तीर्थमुत्तमम्
॥ नाभिमारभ्य तीर्थेषु स्नात्वा संपूज्य देवताः ॥ २८ ॥ म
ज्जन् मज्जन् जगद्धात्रीं कमलासव्यलोकयत् ॥ तां सं
पूज्य महामायां सर्वकामफलप्रदाम् ॥ २९ ॥ धाराती
र्थे ततः स्नात्वा कपिलासंगमे ततः ॥ अष्टतीर्थीमसौ
कृत्वा विधाय पितृतर्पणम् ॥ ३० ॥ कुमारीशांशिवन-
त्वा कपिलाद्वारमाययौ ॥ तस्मिन्निमज्ज निर्धूतप्राक्
जन्मांतरदुष्कृतः ॥ ३१ ॥ संपूज्य नत्वा स्तुत्वा च मधुसू
दनमधुच्युतम् ॥ उषित्वा तत्र तां रात्रिं प्रागात्प्रातः सह
द्विजैः ॥ ३२ ॥ नरसिंहवने तत्र तीर्थे रामस्य दीर्घिका
॥ प्रल्हादपूजितः साक्षादास्ते तत्र नृकेसरी ॥ ३३ ॥
तं दृष्ट्वा तत्र देवेशं पूजयित्वा तु भक्तितः ॥ तत्र तं दिवस
नीत्वा प्रययावंबिकापुरम् ॥ ३४ ॥ अनुग्रहाय भक्ता
नामंबिका यत्रातिष्ठति ॥ पूरयंती स्वभक्तानां वांछिता-

न्यखिलान्यपि ॥ ३५ ॥ पूजयित्वांबिकां भक्त्या गंधपुष्पानुलेपनैः ॥ उपहारैश्च विविधैः स्तोत्रैः प्रणतिपूर्वकम् ॥ ३६ ॥ विप्रस्ततस्सुराष्ट्रास्यः कष्टस्थानाभिधं पुरम् ॥ यत्रास्ते परमा लक्ष्मीर्महाशक्तिर्महद्युतिः ॥ ३७ ॥ तामवेक्ष्य सुधाभानुभास्करद्युतिमंडलाम् ॥ संसारतापविच्छेदां गलत्पीयूषवाहिनीम् ॥ ३८ ॥ योगिराजहृदंभोजराजहंसनिषेविताम् ॥ अनाहतमहानादमयीमद्वयरूपिणीम् ॥ ३९ ॥ महालक्ष्मीं भगवतीं वांछितार्थप्रदायिनीं ॥ आराध्य भक्तिभावेन चेतसा स मुनीश्वरः ॥ ४० ॥ विवाहमंडपप्रापपुरोभिधसमन्वितः ॥ पुरे तत्र प्रतिजनं वासस्थानमयाचत ॥ ४१ ॥ न लेभे वसतिस्थानं गृहे कस्मिन्नपि द्विजः ॥ दर्शितं ग्रामपालेन विशालं वासमंदिरम् ॥ ४२ ॥ प्रविश्य वसतिं चक्रे ब्राह्मणः संगिभिः सह ॥ ततः प्रभाते विमले स्कंदासौ द्विजोत्तमः ॥ ४३ ॥ बहिरालोकयांचक्रे वासगेहान्निजवपुः ॥ अथ धन्यान्निखिलान्न्यान्यत्र क्वापि यदृच्छया ॥ ४४ ॥ गतान्मेने समायातग्रामपालं ददर्श सः ॥ तं बभाषे ग्रामपालश्चायुष्मानसि सर्वशः ॥ ४५ ॥ भागधेयवतां पुंसां पुण्यैः पुण्यवतामसि ॥ प्रभावो विद्यते तावत्कोपि लोकोत्तरस्त्वयि ॥ ४६ ॥ क्व म याताः सहायास्ते कथं तत्सदनाद्बहिः ॥ ततस्थान्मुनिशार्दूल कथयामितवाग्रतः ॥ ४७ ॥ किं तु नान्यं त्वया तुल्यं पश्यामीह तपस्विनम् ॥ कं जानासि महामंत्रं कां विद्यामवलंबसे ॥ ४८ ॥ कस्य देवस्य कारुण्याच्छक्तिर्लोकोत्तरा त्वयि ॥ तत्कारुण्यवशाच्चिरग्रा

मेऽस्मिन् द्विजसत्तम ॥ ४९ ॥ शुश्रूषां परमामेव भ-
गवंस्ते करोम्यहम् ॥ इति तं वासयामास तस्मिन् ग्रा
मे मुनीश्वरम् ॥ ५० ॥ परिचर्यां च तस्यासौ भक्त्या
चक्रे दिवानिशम् ॥ दिवसेषु प्रयातेषु सप्ताष्टसु सम
यिवान् ॥ ५१ ॥ प्रातरागत्य तस्याग्रे रुरोद भृशदुः
खितः ॥ अद्य मे भाग्यहीनस्य गुणवान् भक्तिमान् सु
तः ॥ ५२ ॥ जाज्वल्यमानदंष्ट्राभिर्भक्षितो निशि रक्ष
सा ॥ इत्येवं रक्षसेणोक्तस्तं पप्रच्छ स संयमी ॥ ५३ ॥
क्वास्ते स राक्षसः पुत्रो भक्षितस्ते कथं वद ॥ इत्युक्तो ग्रा-
मपालस्तं मुनीश्वरमभाषत ॥ ५४ ॥ ॥ ग्रामपाल
उवाच ॥ ॥ अस्त्यत्र नगरे घोरः पुरुषादो निशाच
रः ॥ सखादति नरानेत्य नित्यं नगरगोचरान् ॥ ५५ ॥
स सर्वैर्नागरैरत्र प्रार्थितः पुरुषैः पुरा ॥ रक्ष राक्षस नः
सर्वान् ग्रासं ते कल्पयामहे ॥ ५६ ॥ पथिकानिह संप्राप्ता
न्निशि तान् भुंक्ष्व राक्षस ॥ एतस्मिन् सदने सुप्तान् ग्रा
मपालप्रवेशितान् ॥ ५७ ॥ इत्थं ते नागरा लोका आत्म
नः प्राणगुप्तये ॥ आहारकल्पयांचक्रुर्मां कृत्वा चार
क्षकम् ॥ ५८ ॥ तदारभ्याहमत्रास्मिन् सकुटुंबो हि
निर्जने ॥ अध्वन्यानखिलाँल्लोकान् प्रवेक्ष्यामीह रक्ष-
से ॥ ५९ ॥ भवान् सुप्तो गृहेऽमुष्मिन्नध्वन्यैः संयुतः
परैः ॥ ते ग्रस्ताः किल चानेन त्वं मुक्तोऽसि द्विजोत्तम ॥
६० ॥ प्रभावं भवतो वेत्ति भवानेव न चापरः ॥ किं वर्णया
मि सामर्थ्यं तव शक्तिरलौकिकी ॥ ६१ ॥ मदीयतनय-
स्याद्य मित्रमेकमुपागतम् ॥ अजानता मया सोऽपि त-
नयस्य प्रियः सखा ॥ ६२ ॥ अन्यैः पाथजनैः साकम

स्मिन्गेहे प्रवेशितः ॥ श्रुत्वा तत्र प्रविष्टं तं निशीथे त-
नयो मम ॥ ६३ ॥ तमानेतुं गतः सोपि भक्षितस्तेन र-
क्षसा ॥ दुःखितेन मया सोपि प्रोक्तो सोपिशिताशनः
॥ ६४ ॥ ममापि पुत्रो दुष्टात्मन्भवता निशि भक्षितः
॥ भवज्जठरमग्नोसौ सुकृतो येन हि जीवति ॥ ६५ ॥ अ-
स्ति कश्चिदुपायश्चेद्ब्रूहि त्वं हि निशाचर ॥ मत्साध्यश्चे-
दहं तं तु करोम्येव न संशयः ॥ ६६ ॥ ॥ राक्षस उवा-
च ॥ ॥ अंतः प्रविष्टस्त्वत्पुत्रस्त्वघज्ञात्वाहमभक्षयम्
॥ आजन्म भक्षितैः पापैः सहितो सौ सुतस्तव ॥ ६७ ॥
यथा जीवति मे कुक्षौ यथा भवति रक्षणम् ॥ तथा वि-
हितमप्यस्ति दैवेन परमेष्ठिना ॥ ६८ ॥ गीतैकादश-
मध्यायं यः पठत्यनिशं द्विजः ॥ तत्प्रभावेन मे मुक्ति-
र्मृतानां पुनरुद्भवः ॥ ६९ ॥ ॥ ग्रामपाल उवाच
॥ ॥ कथमेकादशाध्यायसामर्थ्यमिदमद्भुतम्
॥ एतत्सर्वं समाचक्ष्व पृच्छतो मम राक्षस ॥ ७० ॥ इ-
ति पृष्टो मया विप्र सप्रभावो निशाचरः ॥ अचीकथन्
ममाप्यग्रे वृत्तांतमिममद्भुतम् ॥ ७१ ॥ ॥ राक्ष-
स उवाच ॥ ॥ पुरा गृध्रेण केनापि नभोमार्गेण गच्छ-
ता ॥ अस्थिरखंडस्तु तुंडाग्रात्पातितः कापि वारिणि ॥ ७२
॥ तं जलाशयमागत्य कोपि ज्ञानी मुनीश्वरः ॥ महा-
तीर्थमिति ज्ञात्वा तीर्थवदधे पितृतर्पणम् ॥ ७३ ॥ तमूचि-
रे जनाः सर्वे तीर्थमेतत्कथं वद ॥ इति सर्वैः सुस पृष्टो
मुनिस्तान्प्रत्यभाषत ॥ ७४ ॥ ॥ मुनिरुवाच ॥
जपत्येकादशाऽध्यायं त्रिसंध्यं नियतेंद्रियः ॥ यत्र वाग्वि-
प्रवर्यो सौ चौरैर्व्यापादितः पथि ॥ ७५ ॥ तस्यास्थिश-

कुलंगृध्रवदनात्पतितंजले ॥ तेनतीर्थमिदंपुण्यंजा तंपातकनाशनम् ॥ ७६ ॥ ततस्तेमानवाःसर्वेसस्नु स्तत्रजलाशये ॥ निष्कल्मषास्तथाचैवप्रापुस्तेवैष्ण वंपदम् ॥ ७७ ॥ एकादशस्यसामर्थ्याद्ध्यायस्यभ विष्यति ॥ ममापिमुक्तिःपांथानांपुनरुत्थानमद्भुतम् ॥ ७८ ॥ योमयाकश्चिदुद्धीर्णोब्राह्मणोत्रैवतिष्ठति ॥ सचैकादशमध्यायंजपत्येवनिरंतरम् ॥ ७९ ॥ सतेना ध्यायमंत्रेणसप्तवाराभिमंत्रितम् ॥ कृत्वाजलंमहापू तंक्षिपेन्ममकलेवरे ॥ ८० ॥ ततोमेशापनिर्मुक्तिर्भवि ष्यतिनसंशयः ॥ इतितेनास्मिसंदिष्टःसमायातस्त्व दंतिकम् ॥ ८१ ॥ ॥मुनिरुवाच॥ ॥ राक्षसःके नपापेनजातोसौवदरक्षक ॥ यत्क्षपायांगृहेतस्मिन्न रान्स्वादसिनिद्रितान् ॥ ८२ ॥ ॥ग्रामपालउवाच॥ अस्मिन्ग्रामेपुराकश्चिदासीद्विप्रःकृषीवलः ॥ एकदा शालिकेदाररक्षणेव्याकुलोद्विजः ॥ ८३ ॥ नातिदूरेम हागृध्रःपांथमेकमभक्षयत् ॥ तंविमोचयितुंदूराद्दृयां चक्रेनतापसः ॥ ८४ ॥ भुक्त्वापांथंखगस्तावन्निरगाद् बराध्वना ॥ तत्रैवतापसःकोपितपस्तपनिनित्यशः ॥ ८५ ॥ कृषीवलकृतातत्रनसेहत्वबधीरणाम् ॥ ततःस तापसःक्रोधात्तंबभाषेकृषीवलम् ॥ ८६ ॥ धिक्त्वाहा लिकदुष्टात्मन्कठोरातीवनिर्घृण ॥ कुक्षिंभरिपरित्रा णविमुखंहतजीवितम् ॥ ८७ ॥ चोरैश्चदंष्ट्रिभिःसर्पै र्व्याघ्रैर्वापिविषांबुभिः ॥ गृध्रराक्षसभूतैश्चवेतालादि भिराहितान् ॥ ८८ ॥ जनानुपेक्षतेयस्तुसतद्वधफलं लभेत् ॥ नमोचयतियोविप्रंमुश्चोरादिभिर्द्वनम् ॥ ८९

प्रयातिनरकंघोरंसपुनर्जायतेवृकः॥ निहन्यमानंवि
जनेगृध्रव्याघ्रेणमानवम्॥९०॥ मुंचमुंचेतियोवक्ति
सयातिपरमांगतिम्॥ गवामर्थेहतोव्याघ्रोभिर्हतोदुः
ष्टैश्वराजभिः॥९१॥ तेपियांतिपदंविष्णोर्दुष्प्रापंयोगि
नामपि॥ अश्वमेधसहस्राणिवाजपेयशतानिच॥
९२॥ शरणागतसंत्राणकलांनार्हंतिषोडशीम्॥दी
नस्योपेक्षणंकृत्वाभीतस्यचशरीरिणः॥९३॥ पुण्य
वानपिकालेनकुंभीपाकेसपच्यते॥ पश्यन्नपिभवान्नु·
पायंदुष्टगृध्रेणपीडितम्॥९४॥ निवारणसमर्थोपि
नैवचक्रेनिवारणम्॥ निष्कृपोसियतस्तस्माद्भविष्य-
सिनिशाचरः॥९५॥ इतिशापंमुनेःश्रुत्वाकंपमानक·
लेवरः॥ प्रणम्यहालिकोविप्रोबभाषेकरुणंवचः॥९६
॥अत्राहंक्षेत्ररक्षायांचिरंक्षिप्तेनचक्षुषा॥नवेद्मिनि
कटेगृध्रंहन्यमानमिमंनरम्॥९७॥ तेनमेनुग्रहंकर्त्तुं
कृपणस्यत्वमर्हसि॥ समर्थोसियतोब्रह्मन्ममशाप·
स्यमोक्षणे॥९८॥ ॥तापसउवाच॥ ॥पठत्ये
कादशाध्यायंजपत्यनुदिनंचयः॥ तेनाभिमंत्रितंवारि
यदाशिरसितावके॥९९॥ पतिष्यतितदाशापात्तव
मुक्तिर्भविष्यति॥ इत्युक्त्वातमसौपापोहालिकोराः
क्षसोभवन्॥१००॥ तदागच्छद्द्विजश्रेष्ठतेनाध्याये
नमंत्रितम्॥ तीर्थोदकंस्वहस्तेनमूर्ध्नितस्यविनिक्षि
प॥१०१॥ क्षिप्तेतस्मिन्महातीर्थेलप्स्येपुनरमहं
क्षणात्॥ पांथाःप्रत्युद्भविष्यंतिसोपिमुक्तोभविष्य
ति॥१०२॥ ॥श्रीमहादेवउवाच॥ ॥इति
तत्प्रार्थितंतस्माच्छ्रुत्वाकरुणयान्वितः॥ तथेतिस-

हपालेन मुनीरक्षांतिकंययौ ॥ १०३ ॥ एकादशेनते
नांबुविम्बरूपेणमंत्रितम् ॥ निक्षिप्तंतस्यशिरसितेन
विप्रेणयोगिना ॥ १०४ ॥ गीताध्यायप्रभावेन शाप-
मोक्षमवापसः ॥ विहायराक्षसंदेहंचतुर्बाहुस्ततो-
भवत् ॥ १०५ ॥ निर्गीर्णास्तेनपापेनपांथाभ्यासन्सह
स्रशः ॥ चतुर्भुजाबभूवुस्ते शंखचक्रगदाधराः ॥
६ ॥ तेविमानान्यारुरुहुस्तावदूचे सरक्षकः ॥ मदी
यस्तनयः कास्तितंदर्शयनिशाचर ॥ ७ ॥ इत्युक्तेग्रा
मपालेनदिव्यधीर्व्याहराक्षसः ॥ एवंचतुर्भुजंपश्यन
मालश्यामलद्युतिं ॥ ८ ॥ माणिक्यमुकुटंदिव्यमणि
कुंडलमंडितम् ॥ महास्कंधकंबुकंठंहस्तन्यस्तसरोरु
हम् ॥ ९ ॥ हारहारिमहोरस्कंस्वर्गकेयूरभूषितम् ॥
पीतांबरधरंभ्राजद्वनमालाविभूषितम् ॥ ११० ॥ शंख
चक्रगदायुक्तंस्मितपूर्वमुखाबुजम् ॥ राजीवलोचनं
स्निग्धंचारुवक्त्रसरोरुहम् ॥ ११ ॥ किंकिणीकोटिसं
कीर्णंदिव्यचामरराजितम् ॥ दिव्यंविमानमारूढंदे
वत्वंप्राप्तमात्मजम् ॥ १२ ॥ इतितस्यवचःश्रुत्वापुत्रं
दृष्ट्वाचतादृशम् ॥ स्वगेहंनेतुमारेभेतंजहासस्फुतस्त
दा ॥ १३ ॥ कतिवारनुजातोसित्वपुत्रोममरक्षक ॥
पूर्वंपुत्रस्त्वदीयोहमधुनाविबुधोस्म्यहम् ॥ १४ ॥ या
स्यामिवैष्णवंधर्मंब्राह्मणस्यप्रसादतः ॥ निशाच-
रोपिप्राप्तोयंयस्यदेहश्चतुर्भुजः ॥ १५ ॥ एकादशस्य
माहात्म्याद्धातिस्वर्गसमज्जनैः ॥ विप्रादस्मात्त्वमध्या
यमधीष्वत्वंदिवानिशम् ॥ १६ ॥ भविष्यतिनसंदेह
स्तवापिगतिरीदृशी ॥ इत्युक्तातेततः सर्वेप्रापुर्विष्णोः

परंपदम्॥ १७॥ नमध्यायंततोविप्राद्ग्रामपालःपपा
ठसः॥ तावुभौतस्यमाहात्म्याज्जग्मतुर्वैष्णवंपदम्॥
१८॥ ॥ईश्वरउवाच॥ ॥इत्येकादशमाहात्म्य
कथातुभ्यंनिरूपिता॥ यस्याःश्रवणमात्रेणसर्वपा-
पैःप्रमुच्यते॥ ११९॥ ॥इतिश्रीपद्मपुराणेगी
तामाहात्म्येशिवपार्वतीसंवादेएकादशोऽध्यायः
समाप्तः॥ ११॥ ॥ श्रीरस्तुशुभम्॥ ॥




## अथ एकादशोध्यायब्रजभाषाटीकाप्रा०

दशमाध्यायकी महिमा सुनिकें श्रीपार्वतीजी श्रीसदाशि
वजीसौं कहतहैं हेप्रभु आप दशमाध्यायकी कथा मोकों
नीकी भांति सों कही हेसर्वेश्वर अब मोकों एकादश अध्याय

की कथा सुनिवेकी इच्छाहै सो मोसौं आप कृपाकरके॰
कहौ॰ यह बात सुनिके श्रीसदाशिवजी कहन लगे॰ हेपा
र्वती अब मोपैं विश्वरूप ऐसेनाम एकादश अध्यायकी
महिमा सुनि॰ या अध्यायकी सहस्र विध अनेक कथा
है सो संपूर्ण कहनेकौं मैंहू समर्थ नाहीं॰ तातें ताकी एक
कथामैं कहत हौं॰ प्रणीता नाम ऐसे एकनदी तहां मयंक
रनाम एक नगर पर्वतके आश्रय अति ऊंचाहै पोरिपर को॰
टोजाको॰ जहांके लोक सुषी॰ धनाढ्य॰ आचारवंत॰ इंद्रिय
जित॰ अरु ध्वेजापताका करके बडीहै शोभाजाकी तानगर
मैंके महलनकी ब्राह्मन वेदाध्ययनपाठकीधुन करतहै जा
मैं स्त्रियनके नूपुरनकी धुनहै जामैं औरहू मृदंग वीना सु
दरगान इत्यादिक धुनहैजामैं अरुजानगरमैं भगवान्॰
सारगधर विराजै सो कैसे है साक्षात् ब्रह्म जगत मूर्तिमं
त ब्रह्म अरु जगतकेजीवनहै॰ अरु लक्ष्मीके नेत्र कमल॰
करके पूज्यनहै मेघस्यामहै॰ त्रिविक्रमरूप कोमल कांतहै
श्रीवत्सादिक अपनेचिन्ह आभूषन करिके जुक्तहै॰ मानो॰
रत्नकरिके जुक्त समुद्रहीहै॰ ऐसोपरमात्मा श्रीभगवा॰
न् दुर्गनगरके ऊपरि विराजतहै॰ अरु जिनिके दर्शन मात्र
तैं मनुष्य संसारके बंधननें छूटे॰ जहां मेखलानाम कर
के एक बडो तीर्थहै॰ जातीर्थके स्नानमात्रतैं मनुष्य वि॰
ष्णुलोककौं प्राप्त होई॰ अरु ताही तीर्थमैं श्रीनृसिंहके
दर्शन कियेतैं मनुष्यके सातजन्मके पाप दूरि होई॰ अरु
तहांही पुन्यगनेसके दर्शन कियेतैं अनेक विघ्न दूर॰
होई॰ वहां कोऊ एक शांत दांत अरु अहंकार ममताक
रकै रहित सर्वशास्त्रको वेत्ता जितेंद्रिय॰ परम वैष्णव वा

रुद्रेवपरायण ऐसो एक रुनंदनाम ब्राह्मनरहै· सो सारंग
धर विष्णुके निकट नित्य गीताकी आवर्तन करै· अरु अ-
ध्यायके प्रभावकरिकै ब्रह्मज्ञानी भयो· परम आनंदके समू
हमें रहै· विषयसों विमुखरहै· अरु अपनो अंतःकरणनि
श्चल करके शुद्ध है जीवन्मुक्तहै सो ब्राह्मन वाठौर नित्यप्र
तिरहै· पुनः कहूंदिना यह ब्राह्मन सिंहस्थमें गोदावरीकी
जात्रा करनकों चल्यो· सो प्रथमदिन विरज नाम तीर्थमें-
आयो· जहांस्नान करिकै देवता पितृ तृप्ति करये अरु तहां
ही फिर लक्ष्मीजीको दर्शन कर्यो· अरु उनकी पूजाकरी·
अरु फिता तीर्थ आनिकै स्नान कर्यो· पुनः कपिला तीर्थ सं
गमेंन्हायो पुनः अष्टतीर्थमें स्नान करिकै पितृतर्पन कर्यो
तहां कुमारीस नाम महादेवको दर्शन करिकै तहांसे फिर
कपिल द्वारमें आये· तहांही स्नान करिकै जन्मांतरके पाप
धोये· तहांश्री मधुसूदनकी पूजा करी· अरु नमस्कार कर
स्तुति करी· अरु एकरात्रि तहांवसके प्रातःकाल अपने-
ब्राह्मन समुदायके संग चल्यो· सो चलके नरसिंह वनकों
आयो· जहां रामदीर्घका ऐसे नाम तीर्थहै· अरु जहांप्रु
न्यप्रल्हाद करिकै पूजित श्रीभगवान नृसिंह विराजै· ति-
नको दर्शन करिकै भक्तिपूर्वक उनकी पूजा करी· वादिनवा
हीठौर वसिकै प्रातःकाल अंबिका पुरकों पहुच्यो· जहां
भक्तनके मनोरथ सिद्धि करिवेकों अंबिका विराजै· तहां
अनेक धूपदीप नैवेद्य समर्पिकै अरु स्तुति करि नमस्कार
करके अंबिका पूजन कर्यो· तहांसे ब्राह्मन कटिस्थानती
र्थनाम नगरकों आयो· तहां भगवती महालक्ष्मी विराजै
जाकों योगेश्वर हृदयमें ध्यानधरै ताको आराधनकरि·

के पुनः उहांतें चल्यो॰ सो विवाह्ह मंडप नाम नगर आयो॰
दोच्यार संगी अपने संगलीये रहनेकों ठौर नपाये॰ परि सब
नगर फिरे काहूने ठौर न दई॰ तब वहांही उनकों वा नगर
को कोटवाल मिल्यो उनकों सब अपनो वृत्तां कह्यो तब इ-
न्होने रहिवेकों बडो एक विशाल घर दिषायो॰ तहांजाय
विश्राम कस्यो॰ तब इतनेमें प्रातकाल भयो॰ तिस समय
सुनंदन ब्राह्मन उठिके वा घरके द्वारमें आन ठाढो भयो॰
तब वाही नगरके लोकनें याकों देषिकें उनकों बहुत अचि
रज भयो॰ इन जानी की इन घरमें जो कोऊ आय रहे॰ या घ
रमें कोऊ जीवतो निकल्यो नाहीं सब मस्योही हे॰ अरु य
ह केसो जीवतो रह्यो॰ तब इनमें वह ब्राह्मन चलवेकी त
यारी करी॰ इतनेमे कोटवाल वहां आयो॰ अरु वह ब्राह्मन
कों देषिके पूंछन लग्यो॰ हे ब्राह्मन तुमारे कुशल आनंद
हे नेक ठाढो रहिके कह॰ तब वह आनंदसो बोल्यो आनंद
है॰ तब कोटवाल बोल्यो॰ महाराज तुम बडे भाग्यवान हो॰ ध
र्मात्मा हो॰ तुह्मारी महिमा हमकों कछु अद्भुतसी लगती
हे॰ अरु तुह्मारे संगके संगी औरहे सो या ठौरतें कहांगये॰
तुम उनकी षवर करो॰ अरु तुह्मारे बराबर तपस्वी और॰
देष्यो नाहीं॰ तुम कहां विद्या पढे हो॰ कोन मंत्र जपते हो॰ अरु
कोन देवकी कृपानें तुममें ऐसी शक्ति अद्भुत हे॰ अब तुम
हमारे ऊपर कृपा करिके याही ठौर विराजो॰ हम तुह्मारी॰
सेवा नीकी भांतिसें करेंहें॰ ऐसे कहिके अपने ग्राममे ब्रा
ह्मनकों वसायो॰ तब याकी सेवा रात्रि दिन करकें नीकी भां
तिसबही सेवा करन लगे॰ तब ऐसे करत करत सात आठ
दिन वितीत भये॰ तब एक दिन प्रातकाल यह कोटवाल या

के आगें आयके रोवन लग्यो· तब यह ब्राह्मननें पूंछी तुम
काहेतें रोवन हो· तब फिरि कोटवाल रोवन लग्यो काहूपा
पी राक्षसनें मेरो लायक गुनवंत भक्तवंत ऐसो पुत्रहतो·
सोयाराक्षसनें भक्षन कस्यो· तब ब्राह्मननें पूछ्यो यह रा-
क्षस कहांहे· तबयह कोटवाल बोल्यो एक इहां पर्वत नग
रहै तहां यहराक्षसहे सोइहां आयके नगरके मनुष्यन
कों भक्षनकरै· तबसबनगरके मनुष्यन मिलके यासों क
ह्यो हेराक्षस यानगरमें पथिक कोऊ आनि निवास करै
तिनकों तूं भक्षन करि· ऐसो यालोकनें अपने प्राणरक्षा
केनिमित्त याकों आहार बतायो· तबकाहूदिना और प
थिकवासहित वाघरमें निद्राकरै· और उनकों राक्षसनेभ
क्षन कस्यो· तुम अपनें प्रभावकरिके वचे· आपमें कहा·
प्रभावहे सोतुमही जानो· कालही मेरेपुत्रको एकमित्र
रहै· ताकों बिनाजानें औरनकेसंग याठौरमें घरमेंडेरो·
दियायो· अपने मित्रकों याठौर आयोजानिके मेरोपुत्रअ
र्धरात्रिकेसमय याठौरगयो· तब राक्षसनें उनकेसंग मेरे
पुत्रकों भक्षन कस्यो· यहषबर मोकों प्रातःकाल षबरभ
ई· तबमें दुःखितहोइके कही· रेदुष्ट तुम मेरेपुत्रको भ·
क्षन कस्यो अब कोऊ उपाय करिकें तेरेउदरतें मेरोपुत्रजी
वत निकसे सो प्रकार कहो· तब राक्षस कहत हैं· मेंअन·
जाने तेरे पुत्रकों औरनकेसंग षायो· सो तेरे पुत्रलगजेम·
नुष्य मेंने भक्षन करेहे तिनमें हे· अब मेरो अरु तेरो पुत्र
कों अरु सब पथिकनकों जीयवेको उपायहे· जोउपाय
परमात्मानें कह्योहे सो तूं सुनि· गीताके एकादशअध्या
यको पाठकरिहे ताके प्रभाव करिके जितने जंतु आजन्म

तें मैंने भक्षन करे हे ते सबही जीये अरु वाउपायसें मेरी
ही मुक्ति होयगी० यह सुनिके कोटवाल बोल्यो० जो ऐसी
एकादश अध्यायकी महिमा काहेतें भई० तब राक्षस क
हन लग्यो याकी महिमा मोपें सुनि० कोऊएक गीध आ
काश मारगतें उड्यो तब याके चंचुमेंसे एक अस्थिको षंड
कहूं जैसे तैसें या सरोवरमें आय पड्यो० तब कोऊएक त
त्वज्ञानी वासरोवरकों तीर्थजानिके स्नान करन लग्यो० त
बवाकों लोक पूंछन लगे हे महापुरुष यह ऐसो सरोवर०
तीर्थ कहांतें भयो० तातें तुमस्नानकरके तर्पन करतहो० तब
यह तपस्वी बोल्यो कृतवान ऐसेनाम एक ब्राह्मन सो नि
त्यत्रिकाल एकादश अध्यायको पाठकरे ताकों कहूं मारग०
चलत अरन्यमें चोरनें मार्‍यो० सो चोर तो नरकगामी भये
परि उनब्राह्मणके अस्थिके षंडकों ग्रीधनें आनि यासरो
वरमें डार्‍यो तातें यासरोवरमें को पाप नाशन भयो० तब
तें औसबही लोक यातीर्थमें स्नान करन लगे० अरु यान
ही पुन्यकरके सबही कृतार्थ भये० तातें हे कोटिवाल०
या एकादश अध्यायके प्रभावकरिके जितने पथिकनके
मैंने भक्षन करे हे तिनकों जीवन अरु मेरी मुक्तिहोई ता
में संदेह नाहीं अरु मैं एकादश अध्यायकों पाठ को क
र्ता एक कोऊ ब्राह्मन उगल डार्‍यो हे सो याही नगरमें हे०
अरु एकादश अध्यायको निरंतर पाठ करत हे० सो जल०
मंत्र सप्तवार मेरेऊपर डारे तो ताप्रभावसें मेरीमुक्ति हो
ई० जामें संदेह नाहीं अरु पथिकनकी ही मुक्तिहोई०
सो केसी होई तो तिनकोंही जीवन्मुक्तिहोई० इसमें कु
छभी संदेहनाहीं० हे ब्राह्मन ऐसें याराक्षसनें मोसों क

हीहै. यह कोटवालका वचन सुनिकै ब्राह्मन पूंछन लग्यो कियहराक्षस कोन हतो. अरु काहेतें राक्षस भयो. जो आयके रात्रिको वाघरमें सुतैमनुष्यकों भक्षनकरे. तब कोटवाल बोल्यो याहीनगरमें कृषिवलनाम ब्राह्मन हतो. एकदिना अपनोचावलनके षेतकों आप रषवालतो हतो. तबयाके निकटहीजु काहूगीधने एक पथिककों मारिभक्षन कस्यो. ताकों देषिकें याकों छोडावनकों एक तपस्वीधायो. तापहिलेहीग्रीधनें वाकों मारि भक्षन करिकें उड्यो. तब तपस्वीउही कृषिवल ब्राह्मन पर कोपकरिकें बोल्यो हे. ब्राह्मन तोकों धिक्कारहै. तूंनिर्दई अरु कठोर मनकोहै. उदर भरननिमित्त पराई रक्षातें विमुषहै. तातें तेरोजीवन कोन कामको. चोर सर्प व्याघ्र. दावाग्नि विष. जल. ग्रीध. राक्षस. प्रेत इनकरकें अरु औरही भयकरिकें काहू मनुष्य जंतुको मरणहोई अरु इनकी मनुष्य रक्षा करिवेकों समर्थ होई. अरु इनतें याकी रक्षानकरे तो तासों बडोपापहोई. बहुरि तपस्वी कहनलग्यो. चोरादिकनितें भयभीतहोई अरु ताकीजोरक्षानकरे सो नरकभोग करे. कोटि कोटि योनि पाई. अरु किसी को कोई मारतो होवे ऐसो कुहे छांडिछांडि सोपुरुष स्वर्गमेंजाय प्राप्त होई. जो कोऊ सहस्त्र अश्वमेधकरे वा एकसत वाजपेय यज्ञकरे ऐसो फल शरणागतकी रक्षाकरे ताकों होई. पुन्यात्मा होई. सामर्थवालो होईके रक्षा नकरे काहू दिनकों तो उनका नरक प्राप्त होई. हे कृषिवल तेरे देषतेंही याग्रीधनें पथिक कों मारिके भक्षन कस्यो. अरु तेरेमें सामर्थ्य होयकें निवारणनकस्यो. तातें तूंनिर्दई अरु महाक.

ठोरहै सो तूं राक्षस योनि पाईगो ऐसो सराप सुनिके वह ब्राह्मन कंपन लग्यो अरु विनती करन लग्यो॰ हे महापुरुष मेरी दृष्टि याषेतमें हती॰ अरु मैं याकों देष्यो नाही॰ यह काम मेरे विनजाने भयो है॰ तातें आप कृपा करिके मेरेऊपर अनुग्रह कीजे॰ तब तपस्वी उनकेऊपर कृपाकर बोल्यो जोकोऊ ब्राह्मन एकादश अध्यायकी आवर्तन नित्य करनेवालो होय वह ब्राह्मन जलमंत्रके तेरेमस्तकपरि डारे पानकरे तब तेरी मुक्ति होई॰ अरु राक्षसयोनि छूटे॰ ऐसे कहिके तपस्वी आगे चल्यो॰ यह कृषिवल ब्राह्मन राक्षस भयो॰ यहवात मोकों राक्षसनें कही है॰ हे महापुरुष वाकोउद्धार अरु मेरेपुत्रको जीवन यह दोऊ कार्य करिवेकों उहां मेरेसाथ चलो॰ अरु एकादश अध्याय करिकै जलमंत्रि वाके सिरपर डारिकै उनकों कृतार्थ करो॰ यह कथा श्रीमहादेव पार्वतीसों कहे हे पार्वतीजी, याकोटवालको वचन सुनिकै अरु असंख्यात पथिकनके मुक्ताके निमित्त वह ब्राह्मन राक्षसके निकटगयो॰ अरु वहांजायके गीताके एकादश अध्याय करिकै जलमंत्रके राक्षसके शिरपर डार्यो॰ तब गीताकी महिमा करिकै यह राक्षस सरापतें छूट्यो॰ राक्षसकी देहतें चतुर्भुजरूप भयो॰ अरु तिसने जितेक सहस्त्रावधि पथिक गिले हते तेसबही चतुर्भुजरूप शंख चक्र गदा अरु पद्मधारी ऐसे विष्णुरूप भये॰ अरु विमानमें बैठिके आकाशकों चलनलगे॰ तब यह कोटवाल बोल्यो॰ हे राक्षस मेरोपुत्र कोनसो है सो मोकों देषाय॰ तब विष्णुरूप राक्षसबोल्यो हे कोटवाल यह श्याममूर्ति चतुर्भुज॰ मुकुट कुंडलादि सहित॰

विष्णुरूपव्है विमानपरि बैठ्योहै सोही तेरो पुत्रहै तब
यह हाथ पकरिकै याकों अपनेघर लेजानेको उद्यम की-
यो तब यह कोटवालको पुत्र हस्यो अरु कहने लग्यो हे
पिता केतीक बार मैं तेरो पुत्र भयो अरु तूंही मेरो पुत्र के
तीक वार भयो या बातकौ कोऊ अंत नाहीं अरु अब तो-
मै यह ब्राह्मनके अनुग्रहतें देवरूप होयके विष्णु लोक
कौं जातहौं यह राक्षसहू विष्णु रूप भयो यह सब एका
दश अध्यायकी महिमा जानि तूंहू याही ब्राह्मनके पास
एकादश अध्याय पढिकरि या स्वरूपको प्राप्त होहु यह
गीताकी महिमासें आपकौंही यह गति होवे तामें संदे-
हनाहीं हेपिता सत्संगति अति दुर्लभहै सो तुह्मारे भा
ग्य कारकै यह ब्राह्मन तुह्मारे घर आयोहे अरु उनकी
आपकी संगति भईहै वास्ते तुम अपने जन्मका सार्थ
क करो अरु वैकुंठमें आनि मिलो जैसे विश्वरूप यह अ
ध्यायके पाठ कीयेतें फल प्राप्त होई तैसे जग्य दान तीर्थ
तपस्या कीयेते नहोई या गीताके अध्यायको पाठ कीयेतें
विष्णुके रूप प्राप्त होई यह अपनी तत्व भगवान् कृपा
करिकै कुरुक्षेत्रमें महाभारतके समै अर्जुनको उपदेश
कर्यो याके पाठ अरु श्रवन कीयेतें आधि व्याधि अने-
क जन्मके दुष मिटै अरु परम सुखको प्राप्त होई यह
कोटवाल पुत्र अपने पिता कौं समुझाई सबहि विमान
में बैठिकै वैकुंठको चले तब कोटवालने ब्राह्मन केपा
स गीताको एकादश अध्याय पढिके याके प्रभावतें ब्रा
ह्मन अरु कोटवाल दोऊ मुक्ति भये यह कथा सदाशि
वजीनें पार्वतीजीसों कही हेपार्वती एकादश अध्यायकी

महिमा ऐसीहै॰ जाकें श्रवण मात्रतें महापातक नाश होइ अरु अक्षय सुख पावै॥११॥ ॥दोहा॥ ॥

एकादशअध्यायमें महिमाकरीअपार॥ विश्वरूपअध्यायकी करनीकेनिरधार॥१॥ पहिलमयंकरनगरकौवरन्यौबहुतबनाइ॥ तामेंसारंगपानकी मूर्तीसुखदसुहाइ॥२॥ पुन्यमेखलतीर्थको ताहीपुरकेपास॥ विप्रसुनंदवसैंजहां वासुदेवकेधाम॥३॥ सुनसुनंदतीर्थकरै नेऊकरैंबनाइ॥ नितहीसारंगपानिढिग विश्वरूपअध्याइ॥४॥ द्विजसुनंदपढिकेनस्यो ब्रह्मज्ञानचितचाइ॥ आगेगोदास्नानकौं चल्यौबहुतसमुदाइ॥५॥ पुन्यसुनंदनतीर्थकरयेतेहूकहेबनाइ॥ व्याहमडपहैनगरकी कथाकहीबहुभाइ॥६॥ ग्रामपालअरुविप्रको बहुरिकस्योसंवाद द्विजमहिमाजानीजबै मांग्योपुत्रप्रसाद॥७॥ बहुरिनिशाचरकीकथा द्विजनकहीसमुझाइ॥ विश्वरूपअध्यायकी महिमाबहुविधगाय॥८॥ फेरनिसाचरनेंकहीग्रामपालसोंवात॥ ग्रीधचूचतेंविप्रके कस्योअस्थिकेपानि॥९॥ अस्थिषंडकुलवानको परयोकहूंजलमाहि॥ कानिहूमुनितीर्थानरिष सबकेकरीसहाइ॥१०॥ सबसुनंदअध्यायपढिजलडारयोकरयुक्त॥ पथिकसहितराक्षसयुत करयौसबनकोमुक्त॥११॥ विश्वरूपअध्यायकी महिमा कहीविशाल॥ जनहितआनंदरामयह॥ करिप्रणामसगोपाल॥१२॥ ॥इतिश्रीपद्मपुराणे उत्तरषंडेश्रीउमामहेश्वरसंवादे गीतामाहात्म्ये एकादशोऽध्यायः ॥११॥ ॥श्रीसीतारामचंद्रार्पणमस्तु॥ ॥

## अथगीतामाहात्म्यद्वादशोऽध्यायमूळप्रा॰

श्रीगणेशायनमः॥ ॥श्रीमहादेवउवाच॥ ॥
द्वादशाध्यायमाहात्म्यमधुनाशृणुपार्वति॥ यदाक
र्णनमात्रेण सर्वसिद्धिःप्रजायते॥ १॥ अस्तिकोल्हापु-
रंनाम नगरंदक्षिणापथे॥ रूरवानांसदनंसिद्धसाधू
नांसिद्धिदंपरम्॥ २॥ पराशक्तेः परंपीठंसर्वदेवनिषे-
वितम्॥ पुराणेषुप्रसिद्धंयद्भुक्तिमुक्तिफलप्रदम्॥ ३॥
कोटिशस्तत्रतीर्थानि शिवलिंगानिकोटिशः॥ आस्तेरु
द्रगयायत्रविशालंलोकविश्रुतम्॥ ४॥ तुंगाचलम
हावप्रगोपुरोल्लासितोरणम्॥ प्रासादशिखरोल्लसि
प्रोत्तुंगकनकध्वजम्॥ ५॥ सोमकांतमहासौधरु-
क्मभित्तिसुशोभितम्॥ जालमार्गोद्गिरद्धूपधूमामो
दितदिक्तटम्॥ चलत्पताकविस्तीर्णशालादेवाल-
यान्वितम्॥ ६॥ चतुरैः सुंदरैः स्निग्धैः श्रीमद्भिः शुद्ध
मानसैः॥ अधिष्ठितंसदाचारैः पुरुषैर्भूरिभूषणैः॥
७॥ कुरंगनयनाश्चंद्रवदनाः कुटिलालकाः॥ प्रोत्फु-
ल्लचंपकच्छदपीनोत्तुंगपयोधराः॥ ८॥ कृशमध्यानि-
म्ननाभिवलित्रयविराजिताः॥ वाचालमेखलादाम
निकुजन्मणिनूपुराः॥ ९॥ रणत्कंकणहस्ताब्जस्फु
रत्करजरश्मयः॥ वसंतिप्रमदायत्रमोहयंत्योमुनी
नपि॥ १०॥ समस्तवस्तुसंयुक्तंसर्वभोगसमन्वितम्
॥ मंगलैःसकलैर्युक्तंमहालक्ष्मीनिषेवितम्॥ ११॥ त
त्रागच्छत्पुमान्कश्चिद्धवागौरः सुलोचनः॥ कंबुकंठः
पृथुस्कंधो महावक्षामहाभुजः॥ १२॥ समस्तलक्ष

णोपेतो दीर्घः सर्वांगसुंदरः ॥ प्रविश्य नगरं पश्यन् शो
भां सौधेषु सर्वतः ॥ १३ ॥ उत्कंठितमना द्रष्टुं महालक्ष्मीं
पुरेश्वरीम् ॥ मणिकुंडे कृतस्नानः संपन्नपितृतर्पणः
॥ १४ ॥ महालक्ष्मीं महामायां नत्वा तुष्टाव भक्तितः
॥ १५ ॥ ॥ पुरुष उवाच ॥ ॥ जयत्यपारकारु
ण्या शरण्या जगदंबिका ॥ कुर्वाणा जगतां जन्म पाल
नं क्षपणं दृशा ॥ १६ ॥ यया शक्त्या यथादिष्टः परमेष्ठी
सृजत्यसौ ॥ अंब त्वत्सरया शक्त्या पालयत्यच्युतो ज
गत् ॥ १७ ॥ यया शक्त्या कृतादेशः संहरत्यखिलं ह
रः ॥ तां भजेत्परमां शक्तिं विश्वस्थितिलयोज्झिताम्
॥ १८ ॥ योगिध्येयांघ्रिकमले कमले कमलालये ॥
स्वभावानखिलान्सत्वं गृण्हासींद्रियगोचरान् ॥ १९
॥ त्वमेव कल्पनाजालविकल्पकुरुषे मनः ॥ इच्छाज्ञान
क्रियारूपा परासंवित्स्वरूपिणी ॥ २० ॥ निष्कला नि
र्मला सूक्ष्मा निराकारा निरंजना ॥ निरंतरा निरातंका
निरालंबा निरंकुशा ॥ २१ ॥ अंब ते महिमानं कोव्याव
र्णयितुमीशते ॥ २२ ॥ वेदनिर्भिन्नषट्चक्रां द्वादशां
तविहारिणीम् ॥ अनाहतध्वनिमयीं बिंदुनादकला
त्मिकाम् ॥ २३ ॥ मातस्त्वं पूर्णशीतांशुगलत्पीयूष
वाहिनी ॥ पुष्णासि वत्सले बालान् सनकादीन् दिग
बरान् ॥ २४ ॥ अनुस्यूत्याशिवासवान् जाग्रत्स्वप्नसु
षुप्तिषु ॥ तुरीयायां वर्तमाना दयासूनृत संधिषु ॥ २५
॥ ददासि प्राणिनां सर्वाः सततं ब्रह्मसंपदः ॥ संहृत्य
तत्वसंघातं तुरीयातीतयात्वया ॥ २६ ॥ योगिनां बिं
बतादात्म्यं दीयते निर्विकल्पया ॥ पराप्राप्तिं न पश्यंती

मध्यमांवैखरीमपि ॥ २७ ॥ रूपाणिदेविगृण्हासि जगत्संत्राणहेतवे ॥ त्वंब्राह्मीवैष्णवीत्वंचमाहेशीचत्वमिंदिरा ॥ २८ ॥ वाराहीत्वंमहालक्ष्मीर्नारसिंहीत्वमंबिका ॥ कौमारीचंडिकात्वंचलक्ष्मीस्त्वंत्वंचपार्वती ॥ २९ ॥ सावित्रीत्वंजगन्माताश्रद्धात्वंत्वंचरोहिणी ॥ त्वंस्वाहात्वंस्वधात्वंहित्वमेवपरमेश्वरी ॥ ३० ॥ चंडमुंडभुजादंडखंडदोर्दंडविक्रमे ॥ रक्तबीजगलद्रक्तपानघूर्णितलोचने ॥ ३१ ॥ उन्मत्तमहिषीग्रीवोन्मूलनप्रौढदोर्युगे ॥ शंभासुरमहादैत्यदारणायात्तविग्रहे ॥ ३२ ॥ अनंतचरितेतुभ्यंनमस्त्रैलोक्यमातृके ॥ भक्तकल्पलतेमह्यंप्रसीदजगदंबिके ॥ ३३ ॥ ॥ ईश्वरउवाच ॥ ॥ इतितेनस्तुतादेवीमहालक्ष्मीर्वरप्रदा ॥ निजरूपंसमास्थायपुरुषंप्रत्युवाचह ॥ ३४ ॥ राजपुत्रप्रसन्नाहंवृणीष्ववरमुत्तमम् ॥ यंयंवृणीषेकामंत्वंतंतंयच्छामिपुत्रक ॥ ३५ ॥ ॥ राजपुत्र उवाच ॥ ॥ पितामेधरणीपालोवाजिमेधंमहाक्रतुम् ॥ कुर्वाणोदैवयोगेनरोगाक्रांतोदिवंययौ ॥ ३६ ॥ तद्वपुस्तप्ततैलेनशोषयित्वामयाततः ॥ स्थापितंतत्रयागोसौयथापूर्वमवर्त्तत ॥ ३७ ॥ अत्रक्रांतमहीचक्रोयूपेयागतुरंगमः ॥ निशीथेबंधनंछित्वानीतःकेनापिकुत्रचित् ॥ ३८ ॥ अदृष्टात्तद्गतक्वापिनिवृत्तेषुजनेष्वहम् ॥ आमंत्र्यचर्त्विजःसर्वान्शरणंत्वामुपागतः ॥ ३९ ॥ प्रसन्नायदिदेवित्वंसमेयागतुरंगमः ॥ दृश्याभवतुयागोसौसंपूर्णोजायतेयथा ॥ ४० ॥ अनृणंममतातस्यतेनराज्ञोभविष्यति ॥ त

थाकुरुजगन्धात्रि शरणागतवत्सले ॥ ४१ ॥ ॥ श्री
महालक्ष्मीरुवाच ॥ ॥ ममद्वारे द्विजः सिद्धः समा-
धिरिति विश्रुतः ॥ ममाज्ञयासते सर्वं कार्यं संपादयिष्य
ति ॥ ४२ ॥ ॥ श्रीरुद्र उवाच ॥ ॥ इत्युक्तः सम
हालक्ष्म्या ततो राजकुमारकः ॥ आजगाम मुनिः सिद्धः
समाधिर्यत्र गच्छति ॥ ४३ ॥ प्रणम्य तस्य पादाब्जं कृतां
जलिरवस्थितः ॥ तमुवाच ततो विप्रः प्रेषितोसि त्वमंब-
या ॥ ४४ ॥ त्वदीप्सितमिदं सर्वं साधयामि विलोकय ॥
इत्युक्त्वा त्रिदशान्सर्वानाचकर्ष समाधिकः ॥ ४५ ॥ ऐ-
क्षत क्षितिपालस्य तनयासौ नदास्करान् ॥ कृतांजलिपु
टो देवान्वेपमान कलेवरान् ॥ ४६ ॥ अथ तानमरान्स
र्वान्बभाषे सौ द्विजोत्तमः ॥ अमुष्य राजपुत्रस्य वाजी-
यज्ञाय कल्पितः ॥ ४७ ॥ नीतोस्ति देवराजेन क्षपाया-
मपह्नत्य यः ॥ गीर्वाणास्तूर्णमर्वाणं तमानयत माचिरा
त् ॥ ४८ ॥ अथ तस्य मुनेर्वाक्याद्देवैर्यज्ञ तुरंगमः ॥ स
मर्पितस्ततस्तेन दत्तानुज्ञा दिवौकसः ॥ ४९ ॥ जग्मुः क्ष
माप्य तं विप्रं नत्वा स्तुत्वा पुनः पुनः ॥ कृतापराधास्ते-
देवा महाभावं महामुनिं ॥ ५० ॥ आकृष्टानमरान्-
दृष्ट्वागतं लब्ध्वा तुरंगमम् ॥ महीपतिसुतो नत्वा तं
मुनिं वाक्यमब्रवीत् ॥ ५१ ॥ हठादाकृष्य मे दत्तोय
त्त्रियोयं तुरंगमः ॥ तत्किंचिदपरं याचे दुष्करं यत्सुरै-
रपि ॥ ५२ ॥ प्रभविष्यति तत्कर्तुं भवानेव न चापरः
॥ शृणु विप्र महीपालः पितासीन्मे दृढव्रतः ॥ ५३ ॥
आरब्धहयमेधोसौ दैवेन निधनं गतः ॥ अद्यापि त-
स्य देहोस्ति तप्त तैलेन शोषितः ॥ ५४ ॥ तस्य संजी-

वनं भूयः कर्त्तुमर्हसि सत्तम ॥ इत्याकर्ण्य स्मितं कृ
त्वा स जगाद महामुनिः ॥ ५५ ॥ याम स्तत्र पिता य-
त्र तावको यागमंडपे ॥ तैलपूर्णकटाहे तु प्रक्षिप्तोऽस्ति
महीपतिः ॥ ५६ ॥ अथागत्य समं तेन मंत्र सिद्धो म-
हामुनिः ॥ पयो निमंत्र्य विदधे तस्य प्रेतस्य मूर्द्धनि ॥
५७ ॥ ततः प्राप नृपः संज्ञा मुत्तस्थौ च ददर्श ह ॥ स तं
पप्रच्छ विप्रेंद्रं कोसि त्वमिति भूपतिः ॥ ५८ ॥ ततो रा
जसुतः सर्वं भूपालायन्यवेदयत् ॥ आत्मनश्चेष्टितं
तच्च मुनिसंदर्शनावधि ॥ ५९ ॥ स नत्वा ब्राह्मणं रा-
जा नं मुनिं दत्तजीवितम् ॥ बभाषे केन पुण्येन त्वयि
शक्तिरलौकिकी ॥ ६० ॥ यथा मे जीवितं दत्तमाकृष्टा-
श्च दिवौकसः ॥ यागाश्वो दर्शितश्चापि सर्वमेतन्नि
रूपय ॥ ६१ ॥ इत्युक्तस्तेन विप्रोसौ जगाद श्लक्ष्णया
गिरा ॥ गीताया द्वादशाध्यायं जपाम्यहमतंद्रितः
॥ ६२ ॥ तेन शक्तिरियं राजन् यया प्राप्तोसि जीवितम्
॥ एतदाकर्ण्य राजापि द्वादशाध्यायमुत्तमम् ॥ ६३
॥ पपाठ तस्माद्विप्रर्षेः सकाशाद्ब्राह्मणान्वितः ॥ त
स्याध्यायस्य माहात्म्यं ते सर्वे सद्गतिं ययुः ॥ ६४ ॥ अ
भिषिच्य निजं पुत्रं मंत्रवद्भिर्द्विजैः सह ॥ सिंहासने
समारोप्य स्वराज्यं प्रत्यपादयत् ॥ ६५ ॥ महीपति
र्जगामाशु तेन सार्द्धं महर्षिणा ॥ तपस्तप्तुमरण्या
नि भगवद्भक्तिभावितः ॥ ६६ ॥ ॥ इति श्रीपद्म
पुराणे उत्तरखंडे गीतामाहात्म्ये श्रीउमामहेश्वरसंवा
दे द्वादशोऽध्यायः ॥ १२ ॥ ॥ श्रीरस्तु ॥ ॥




## अथद्वादशोध्यायबृजभाषाटीकाप्रारंभः

श्रीमहादेवउवाच॥ ॥ अबसदाशिवपार्वतीसों कहत-हैं हेपार्वती एकादश अध्यायकी महिमा मैंतोसों कही अब तूंमोपैं द्वादशअध्यायकी महिमा सुनि· दक्षिण दिशामे परमसुखको निधान· सिद्धिको निवास भगवतीको संस्थान· सबहीदेवनकरिके सेवित पुराननमें प्रसिद्ध· भुक्तिमुक्ति फलको दाता· ऐसोकोल्हापुरनाम एकनगरहै·जहां कोटिएक तीर्थ· कोटिएक शिवलिंग· अरुजहां रुद्रगया नामतीर्थहै· नगरके महिलनके शिखर ऊपरि स्वर्णध्वजा करिकै शोभितहैं· जाकेऊंची पोरिनपर तोरिन विराजतहै· धनाढ्य अरु आचारवंत ऐसे पुरुष उसही नगरमें विराजतहैं· जा नगरमें याभांति· कीस्त्री जाकेमृगकेसमान नेत्रहैं· चंद्रबिंबसमान मुखजि·

नका कुटिल कोमल स्याम सचिकन केसहैं जिनके चंपक
समान वरणहै· कुच कठण· पुष्टस्तनहैं जिनके अति कृष्य
है मध्य जिनके· अरु विशाल है जंघाजिनकी कटिमेखला
कंकन हार नूपुर तिनकरके परम शोभित जिनकों देषतही
मुनिनहूकोमन मोहै· परंतु जानगरमें अनेक वस्तु पाइये
अरु अनेक प्रकारनसो लक्ष्मी को निवास· जहां एक तरुण
गोर दीर्घनेत्र· आजानुभुज, सर्वांगसें सुंदर सबहील
क्षण करके युक्तहै ऐसो पुरुष आनि निकस्यो· उनहीनें
सब नगरकी अतिरमणीय शोभादेषिके फिरत फिरत·
लक्ष्मीको दरशन करण आयो· जहां मनकुंडि तीर्थस्ना·
न करिके पितृतर्पन कीनो· तब श्री महालक्ष्मीको दर्शन·
करिके नमस्कार करिके भक्तिपूर्वक भांति भांति करिकेउ
नकी स्तुति कीनी· तब भगवती प्रसन्न भई· और कहन
लगी तूं बर मागि· मैं तेरेऊपर बहुत प्रसन्नहोयके आप
नोस्वरूप प्रकटकीनो और यासों कहनलगी हे राजपुत्र
मैं तोषे प्रसन्न भई· तूं वर माग· तब राजपुत्र बोल्यो हे भग
वती मेरे पिताने अश्वमेधको आरंभ कस्योहै· सो दैवसं·
योग करिके बीचहीमें इनको मरण भयोहै· ताके शरी
रकों मैं तेलमें ताइके धरराष्योहै अरु मैंही जग्यको ए
सोहि आरंभ कस्यो· तब आधी रातकों अश्वकों कोऊए
क हर लेगयो· सो कहूं पावत नाहीं· तब मैं ओहीजज्ञकी
ठौर रक्षकजनकों राषिके तुह्मारी शरण आयोहों अरु·
इहांजो तुम प्रसन्न भयेहै तो मेरो अश्व दीजे· जातें यज्ञस
माप्ति होई· अरु अपने पितासें मैं अनृणी होवों· हे शर
णागतिकी वत्सल भगवती ऐसें यह कार्य कीजे· मैंहूं तु

म्हारो दासहूं॰ मों ऊपर कृपाकीजे तब भगवती बोली हेराज
कुमार मेरे द्वारिमें समाधिनाम ब्राह्मन सिद्ध रहतहै॰ सो मे-
री आग्यातें तेरो सबही कार्य सिद्धि करिहै॰ ऐसे भगवतीकी
आग्या पाइके यह राजकुमार समाधिनाम ब्राह्मनजहा॰
तपस्या करत हुतो तिनके निकट आयो॰ अरु आनिके नम
स्कार प्रणाम कर हाथजोड ठाढोभयो॰ तब समाधि याकों क
हनलग्यो मैं तेरी बात जानी॰ तूं अंबिकाकी आज्ञातें इहां आ
योहै सो तेरो कार्य सिद्धि होयगो॰ ऐसे कहके अपनी मंत्रश
क्ति करिके संपूर्ण देवता बोलाये॰ तब देवता कंपायमान होय
के भयभीत होयके हाथजोडि इनके आगे ठाढे भये॰ हेमहा
राज हमकों कहा आज्ञा करतहो॰ यह सब या तपस्वीकी म-
हिमा राजपुत्रनें देषी॰ तबयह समाधिनाम ब्राह्मन देवता॰
नसों कहन लग्यो॰ कि हे देवता॰ यह राजपुत्रके यज्ञको अश्व
कों इंद्र चोर लेगयोहै उसके पासजाय अश्वकों आनि देहु
ऐसी आज्ञा पायके अश्वकों आनि राजपुत्रके पास दयो॰
जाकी आज्ञा पायके यह सब देवता अपने अपने ठिका-
नेगये॰ ऐसीया तपस्वीकी महिमा देषिके अरु परम विस्म
य होइके यह राजपुत्र यातपस्वीकों कहनलग्यो॰ हे महा-
पुरुष तुम्हारी महिमा बहुत अद्भुत देषी॰ महाराज आप
एकक्षिनमें संपूर्ण देवतानकों आकर्षन करिके यज्ञको अ
श्व मंगाय लयो॰ ऐसी शक्ति मेंकिसकीहू देषीनाहीं॰ मैंयह
जानत होंकि जो कार्य कैसोहू होइ सो॰ देवतानहूंसे नहीं
होई सो तुमतें होई॰ तातें महाराज मैं आपकों एकविन॰
ती करतहों कि बृहद्रथ ऐसेनामराजा मेरोपिता॰ ताकी दे
हमैं तेलमें तमकर राष्योहै सोवाकों संजीवन करनेको आ

पही समर्थ हौ० यातें कृपाकरके यह मेरो कार्य कीजे० यह राजपुत्रकी बातसुन तपस्वी हसकर कहन लग्यो० हे राज पुत्र यह बडा अचरजका काम मेरेहाथसे कैसा होय० पर तुम कहतहै इसवास्ते हम तुम वाहीठौर जावेंगे० जहां तेरो पिता है० ऐसे कह तपस्वी अरु राजपुत्र दोऊ जग्यमंडपमें आये० अरु राजाकी देह तैलमे राषीथी० वाको निकालकर यज्ञमंडपमें धरी अरु ब्राह्मनने० गीताके द्वादश अध्यायके आवर्तन करिके अरु जलमंत्रके राजाके० शिरपर डार्यो० तब वह राजा सचेत होयके या तपस्वी० कों देष्यो० अरु हाथजोड कर पूछन लग्यो हे तपस्वी आपकोनहो तब राजपुत्र निकट आयके इनको सब वृत्तांतविधिपूर्वकसों कह्यो० तब राजा प्रसन्न होयके यातपस्वी कों अष्टांग प्रणाम करिके अरु हाय जोडके विनती करनलग्यो० हे महापुरुष० तुम मे कौन विद्या करके ऐसी अलौकीक शक्तिहै० जाकेप्रतापतें मोको जीवदान दियो० अरु संपूर्ण देवतानकों आकर्षन कर्यो अरु यहां आयके मेरे जग्यको उद्धार कीनो० सो यह मोसों कहो० तब ब्राह्मन समाधिनाम अपनी मधुर वानीसों कहन लग्यो हेराजा मैं गीताके द्वादश अध्यायकों नित्य आवर्तन करतुहों० ताके प्रभावकरिके मोमें ऐसी शक्तिहै ताते तुमारोजीव नभयो० यावात सुनिके राजा इनब्राह्मनकों प्रसन्न करिके अरु प्रार्थनाकरिके यह ब्राह्मनके पास० द्वादश अध्याय पढिके वा ब्रह्मज्ञान पायकै कृतार्थभये० ताते इनके पाठकियेतें अरु श्रवन कियेते औरनहूकी हूमुक्तिहोई॥१२॥ ॥दोहा॥ ॥ भक्ति

जोगमहिमाकही इहद्वादशअध्याय॥ मुनिसमाधिनृपपुत्र
की बरनीकथाबनाइ॥१॥ कोल्हापुरवरन्योप्रथम जहांकोटि
शिवलिंग॥ बकुरिमहलसोभाकरी मृगनैनीकृशअंग॥२॥
राजपुत्रकोउतहां आयोरतिपतिरूप॥ लक्ष्मीकोंपरनामक
रि अस्तुतिकरीअनूप॥३॥ तवलक्ष्मीपरसन्नहोइ दैन-
लगीवरदान॥ तवराजपुत्रनेकह्यो अश्वमेधपितृयान॥४॥
पितुशरीरसोषतकस्यो तसतेलमेंताय॥ जग्यकरतपुनिअ-
श्वको देवनलयोछिनाय॥५॥ अवदीजैवरदानयह की-
जेपूरणजाग्य॥ तबैराजपुत्रसोंकह्यो लक्ष्मीकरअनुराग॥
६॥ मेरैद्वारैहीरहै मुनिवरासिद्धसमाज॥ देहैमनबलतेस
कलु तेरैसबविधसाज॥ ७॥ नृपसुतसिद्धीसमाधिको क
ह्योजायबहुमान॥ तवहीसबविधिजानिद्विज॥ षेंचलियो
त्रिदशान॥ ८॥ तबैतुरतजग्यहिपशु देवनदीनोआनि
॥राजपुत्रअचिरजभयो द्विजहिकह्योपितृयान॥ ९॥ नृ
पसुतमुनिदोऊचल्ये जहांजग्यकोगेह॥ भक्तिजोगपढि
मंत्रजल सींच्योनरपतिदेह॥ १०॥ ज्योंसोयेत्योंजागियो
नृपतिउठ्योइहभाइ नृपतिनसोंसबहीकही राज
पुत्रसमुझाइ॥ ११॥ भक्तियोगअध्यायकी महिमानृप
हिसुनाइ॥ मुनिवरसिधिसमाधितें पढ्योराजाअध्याय
॥१२॥ भक्तियोगमहिमाकही जैसेशंकरस्याम॥ तैसेभा
षाकरसबै वरनीआनंदराम॥ १३॥ ॥ इतिश्रीपद्म
पुराणेउत्तरषंडेश्रीउमामहेश्वरसंवादेगीतामाहात्म्ये
द्वादशोऽध्याय:॥१२॥ ॥ श्रीसीतारामचंद्रा
र्पणमस्तु॥ ॥ श्रीरस्तुशुभम्॥ ॥

# अथगीतामाहात्म्यत्रयोदशोऽध्यायमूळप्रा०

श्रीगणेशायनमः॥ ॥देव्युवाच॥ ॥द्वादशाध्या
यमाहात्म्यंभवताकथितंमम॥ब्रूहित्रयोदशाध्या
यमहिमांभोनिधिंशिव॥१॥ ॥शिवउवाच॥ ॥
अस्तिदक्षिणदिग्भागेतुंगभद्रामहानदी॥ तस्या-
स्तटेऽस्तिनगरंनाम्नाहरिहरंपरम्॥ २॥ यत्रास्तेभ-
गवान्साक्षाद्देवोहरिहरःस्वयम्॥यस्यदर्शनमात्रे-
णपरंकल्याणमाप्यते॥३॥ तस्मिन्पुरेद्विजोना
म्नाहरिदीक्षितसंज्ञितः॥ तपःस्वाध्यायनिरतःश्रो
त्रियोवेदपारगः॥४॥ दुराचारातुतस्यासीद्भार्याना
म्नाचकर्मणा॥ नसुष्वापसमंभर्त्रादुरालापाकदाच
न॥५॥ क्षणमप्यात्मसवेशेनत्वास्तेस्वैरचारिणी॥
कंठदघ्नंविटग्रहेधयंतीवारुणीरसम्॥६॥ पतिसं-
बंधिनःसर्वांस्तर्जयंतीपुनःपुनः॥ विटैःसहसदोन्म
त्तारममाणानिरंतरम्॥७॥ कदाचिद्व्याकुलाहृष्वा
पुरपौरैरितस्ततः॥ संकेतगेहमकरोत्कांतारेनिर्जनेव
ने॥८॥ अथतत्रैवसाकूतंरममाणाविटैःसह॥ नि-
नायसाबहून्कालान्निजयौवनगर्विता॥९॥ अथत
त्रपुरेनित्यंनिवसंत्यानिरंकुशम्॥ वसंतकालःसमभू
त्स्मरस्यातीववल्लभः॥१०॥ आमूलपल्लवाकीर्णस-
हकारविहारिणाम्॥ कोकिलानांकलालापैःपुनःसं-
जीवितस्मरे॥११॥स्फुरच्चंपकसौरभ्यहारकैर्मलया
निलैः॥ मंदंमंदंप्रसर्पद्भिरांदोलितचरद्रुमे॥ १२॥उत्फु
ल्लमल्लिकामोदमदिरापारणावति॥ अलीनांकर्णिका

रैम्यैःसमंतात्परिशोभिते ॥ १३ ॥ प्रसन्नवारिभिःस्मेर
सरोरुहसुगंधिभिः ॥ मिलन्मरालनिवहैःसरोभिःप्र-
कटीकृते ॥ १४ ॥ घनच्छायासुखासीनहरिणार्भक
धारिभिः ॥ नीरंध्रपल्लवैर्नानाशाखिभिःशोभितावनौ ॥
१५ ॥ तस्मिन्वसंतसमयेमुदितासाभिसारिका ॥ अ
पश्यज्जगदानंददायिनींचंद्रिकांनिशि ॥ १६ ॥ चंचच्च
कोरचंचूच्युतसुधाधाराविधायिनीं ॥ श्वेतीकृत्यचल-
क्षोणीतटद्रुमलतांतराम् ॥ १७ ॥ विकासिकुसुमक्रो
डसांद्रीभूतकरांकुराम् ॥ उल्लासितपयोराशिकल्लोला
लिंगितांबराम् ॥ १८ ॥ मनोभवमहावेगकुलटातोषदा
यिनीम् ॥ घनांधकारसंघातविदारणपटीयसीं ॥ १९
॥ श्वेतीकृतसुसीत्कारपरार्ध्यहिमगर्भिणीम् ॥ मौक्ति
कश्रेणिशुभ्रांशुप्रकाशितदिगंतराम् ॥ २० ॥ अथ-
तस्यांप्रभूतायांप्रपश्यंतीदिशोदश ॥ कामांधाका
मिनीजातापथिसौधविहारिणी ॥ २१ ॥ अपश्यंती
विटान्रात्रौनिर्भिद्यभवनार्गलाम् ॥ जगामसंकेतगृ-
हंनिर्गत्यनगराद्बहिः ॥ २२ ॥ तत्रप्रियतमंकांचित्काम
मोहितमानसा ॥ अन्वेक्षयंतीनाद्राक्षीत्कुंजेकुंजे-
तरौतरौ ॥ २३ ॥ आकर्णयंतीकांतस्यमदालापान्प-
देपदे ॥ अभियातिततःकिंचिद्यत्रसंचारितःस्वनः
॥ २४ ॥ चक्रवाकरुतंश्रुत्वाकांतालापभ्रमादसौ ॥ स
रोवराणिसर्वाणिपर्यटंतीमुहुर्मुहुः ॥ २५ ॥ कांतभ्रां
त्यातरुतलेप्रसुप्तान्हरिणोत्करान् ॥ प्रबोधयंती
सोल्लासमागतास्मीतिवादिनी ॥ २६ ॥ आलिंगंती
वनस्थाणुंजीवितेश्वरशंकया ॥ तदाननभ्रमाद्धूय

भ्रुंबंती विकचांबुजम् ॥ २७ ॥ तत्रतत्रकृतव्यर्थश्र
मासाविफलोद्यमा ॥ विललापवनेतस्मिन्भ्रमंती
विविधोक्तिभिः ॥ २८ ॥ हाकांतहागुणाकांतहामच्चै
तन्यनायक ॥ हामनोहरलावण्यहासौभाग्यनिधे
विभो ॥ २९ ॥ हापूर्णचंद्रवदनहासरोजायतेक्षण
॥ हानाथस्मरतप्रीतिवर्द्धनानंददायक ॥ ३० ॥ अहो
कांतकृताकर्णकर्णकुंडलदीधिते ॥ नयनानंदनिस्यं
दकुत्रतेमुखचंद्रमा ॥ ३१ ॥ यदिकोपेनकुत्रापिगुप्त
वेषोधितिष्ठसि ॥ प्रसादयामित्वांकांतप्रणामात्मा
र्पणादिभिः ॥ ३२ ॥ इत्युच्चैः सर्वतोदिक्षुविलपंती दि
शोदश ॥ इतस्ततोवियोगेनसावभ्रामाभिसारिका ॥
॥ ३३ ॥ तस्याः श्रुत्वावचः कोपिस्फतो व्याघ्रोव्यबुध्य
त ॥ कुर्वन्घुरुघुरुध्वानंपश्यन्प्रतिदिशंरुषा ॥ ३४
॥ आस्फालयन्नखैर्भूमिंगर्जयन्व्योममंडलम् ॥ भी
षयंश्चमृगानन्यान्कंपयंश्चवनस्पतीन् ॥ ३५ ॥ ऊर्ध्वं
कृत्वास्वलांगूलंशार्दूलश्चंडविक्रमः ॥ अभिदुद्रावको
पेनयत्रास्तेसाभिसारिका ॥ ३६ ॥ अथसापितमायां
तमालोक्यपतिशंकया ॥ निर्जगामपुरोवेगात्प्रेम-
निर्भरमानसा ॥ ३७ ॥ ततस्तस्यनखैः क्रूरैः पीडिता-
धीकृतासती ॥ जहौप्रियवपुःशंकांश्रुत्वागर्जितमूर्जि
तम् ॥ ३८ ॥ व्याघ्रोपिपातयित्वातांततोनखशिलीमु-
खैः ॥ विदारयितुमारब्धस्तावद्दूरेथकामिनी ॥ ३९ ॥
तयाविधापिसानारीभ्रममुत्सृज्यसत्वरम् ॥ क्रोशं-
तीकांतकांतेतिसभयंगद्गदस्वरम् ॥ ४० ॥ व्याघ्रत्वंतु
कुतोहेतोर्मांनिहंतुमिहागतः ॥ इदंसर्वममाख्याहि

पश्चात्त्वंहंतुमर्हसि ॥ ४१ ॥ इतितस्यावचः श्रुत्वाशा
र्दूलश्चंडविक्रमः ॥ क्षणंविहायतद्गात्रंप्रोवाचप्रहस
न्निव ॥ ४२ ॥ ॥ व्याघ्रउवाच ॥ ॥ मलापहा
नामनदीदेशेतिष्ठतिदक्षिणे ॥ नगरीमुनिपर्णेति
तस्यारोधसिवर्तते ॥ ४३ ॥ यत्रास्तेभगवान्साक्षा
त्पंचलिंगोमहेश्वरः ॥ तस्यांपूर्वमहंविप्रपुत्रोभूत्वा
स्थितस्ततः ॥ ४४ ॥ अयाज्यान्याजयन्नित्यमनेकांदृ
ष्टंनदीतटे ॥ वेदपाठफलंशश्वद्विक्रीणन्धनकांक्षया
॥ ४५ ॥ भिक्षुकान्परांल्लोभात्तिरस्कुर्वन्दुरुक्तिभिः
॥ अदेयंद्रविणंगृण्हन्नदत्तमनिशंततः ॥ ४६ ॥ छल
यन्सकलांल्लोकान्दृणग्रहणकौतुकात् ॥ ततः कंति
पयैः कालैर्जरठत्वमुपेयिवान् ॥ ४७ ॥ वलीपलितवानं
धः प्रपतन्प्रस्खलद्गतिः ॥ पतद्दंतोभ्रमन्नकः प्रातिग्र
हपरायणः ॥ ४८ ॥ हस्तेगृहीतदर्भोहंमगमत्तीर्थस
न्निधिम् ॥ धनग्रहणलोभेनभ्रमन्पर्वसुपर्वसु ॥ ४९
॥ ततोहंसिथिलांगःसन्निर्गतस्तुनिजालयात् ॥ वेप
मानशिरोग्रीवोधनिकस्यालयंप्रति ॥ ५० ॥ अन्नसं
मानशिरोग्रीवो — 
यांचितुभोक्तुंमध्येदष्टः श्वनाभृशम् ॥ अपतंमूर्छितो
भूत्वाततःक्षितितलेक्षणात् ॥ ५१ ॥ ततोहंगलित
प्राणोगत्वावैवस्वतालयम् ॥ भुक्त्वाकर्मफलंतत्र
व्याघ्रयोनिमुपागतः ॥ ५२ ॥ अत्रतिष्ठामिकांतारे
पूर्वपापमनुस्मरन् ॥ नभक्षयामिधर्मिष्ठान्यतीन्
साधुजनान्सतिः ॥ ५३ ॥ किंतुपापान्दुराचारानस
तीर्भक्षयाम्यहम् ॥ अतोऽसितत्वंतत्त्वेनममैवक
वलायसे ॥ ५४ ॥ इत्युक्त्वातेनरवैस्तीक्ष्णैस्तदंगंप्र

विभज्यसः ॥ खंडशोभक्षयामास व्याघ्रस्तामभिसा-
रिकाम् ॥ ५५ ॥ अथतां भक्षितां तेन पापदेहमुपाग
ताम् ॥ यमस्यकिंकरानिन्युः सद्यः संयमिनीपुरीम् ॥
५६ ॥ यमादेशेनतत्रापि मज्जयामासुरोजसा ॥ विण्मू
त्ररक्तपूर्णेषु घोरकुंडेष्वनेकशः ॥ ५७ ॥ कल्पकोटिषु-
मात्रासु तस्मादुद्धाप्यतां मुहुः ॥ रौरवेस्थापयामासु
र्मन्वंतरसमावधि ॥ ५८ ॥ ततोव्याकृष्यतांदीनांरुदं
तींसर्वतोमुखम् ॥ मुक्तकेशा भग्नगात्रां चिक्षिपुर्ज्वलि
तानले ॥ ५९ ॥ एवमादिपरां घोरां भुक्त्वानिरययातनां
॥ इहजातामहापापा पुनः श्वपचयोनिषु ॥ ६० ॥ ॥
शिवउवाच ॥ ॥ तत्रस्वपचगेहेपि वर्धमानादिने
दिने ॥ पूर्वकर्मवशादेव तथैवासौयथापुरा ॥ ६१ ॥
ततः कतिपयेकाले पुनः स्वभवनंययौ ॥ यत्रास्तेजंभि-
कादेवी शिव स्यातः पुरेसति ॥ ६२ ॥ तत्रापश्यद्विज
न्मानं वासुदेवाभिधशुचिम् ॥ गीतात्रयोदशाध्याय-
मुद्धिरतमनारतम् ॥ ६३ ॥ ततस्तच्छ्रवणादेव मुक्तास्व
पचविग्रहात् ॥ निर्धूताखिलपापासा ब्राह्मणस्यप्र-
सादतः ॥ ६४ ॥ रणत्किंकिणिकाक्रांतं दिव्यनारीगणा
वृतम् ॥ दिव्यंविमानमास्थाय जगामत्रिदशालयम्
॥ ६५ ॥ व्याघ्रोपि दैवयोगेन तत्रागत्यमहेश्वरम् ॥ क्रू
रभावंसमुत्सृज्यसहजं शांतमानसः ॥ ६६ ॥ वासु-
देवद्विजादेव गीताश्रवणवैभवात् ॥ प्राप्यद्विजकुले
जन्म प्राप्तवान्परमंपदम् ॥ ६७ ॥ गीतात्रयोदशा-
ध्यायमाहात्म्यमिदमद्भुतम् ॥ कथितं परमेशानिय
त्वया पृष्टमादरात् ॥ ६८ ॥ ॥ इतिश्रीपद्मपु-

राणेउत्तरखंडेश्रीशिवपार्वतीसंवादेगीतामाहात्म्ये
त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ श्रीरस्तु ॥ ॥




## अथ त्रयोदशोध्यायबृजभाषाटीकाप्रा॰

॥ यह कथा सुनिके पार्वती श्रीमहादेव॰
देव्युवाच ॥ 
जीसों कहत भई हे प्रभु दीनदयाल द्वादश अध्यायकी
महिमा मोसों नीके भांति करि कही अब त्रयोदश अध्या
यकी महिमा मोसों कृपाकरिके कहो॰ यह परम पावन
कथा सुनिवेकी मेरे मनको बहुत इच्छा भई है॰ यह पार्व॰
तीको वचन सुनिके श्रीसदाशिवजी बोल्ये हे पार्वती अ
ब त्रयोदशअध्यायकी महिमा मोपैं सुनि जाके सुनेतें प
रम आनंद होवै॰ दक्षिणदिशामें तुंगभद्रा नाम एक नदी
है॰ ताकेतीर हरिहरनाम ऐसे एक नगर है॰ जहां श्रीभग॰

गवान् हरिविराजे जिनके दर्शनमात्रतें आनंदकी प्राप्ति होतहै अरु कल्यानकी प्राप्ति होवै· जहां हरिदीक्षित ऐसे नाम ब्राह्मन रहे अरु ताकी स्त्री परमदुष्ट रहै· वह कबहू भर्तारके संग निद्राकरैनाहीं इनकी व्यभिचारहूमें बुद्धिरहै· मद्यपान करै अरु अपने भर्तारहूके मित्रसंबंधिन सों वैरभाव राखै· वारंवार उनको तिरस्कारकरै अरु कामिन के· संग सदा विहारकरै· ऐसे करत करत काहू दिना लोकोंको संकोच नकरके निर्जन वनमें अपनो संकेतस्थान कस्योहै तहां महादुष्ट कामीपुरुषन संग क्रीडाकरै· ऐसे करत· याकोहू बहुतदिन भये· समय पाय ऋतु वसंत आयो· सो वसंत कैसोहै कामदेवको सखाहै· अठारभार वनस्पती· को अरु षट्ऋतुनको राजाहै लता आम्र इत्यादि बडे बडे वृक्षहै ते सब मूलतें शिखरपर्यंत पल्लवन अरु पुहपन करिके सोभायमान् है· जामें अनेक जातके पंछीनके शब्द होतहै अरु कोकिलानकी वानी करके मानो· कामदेव इहां जीवित भयोहै· अरु औरहू अनेक प्रकारके गुनकरके संयुक्त सोवसंत तामें इनचंद्रमाकीचांदनी देखि कामातुर होइके विभचारकी इच्छा कीनी· यह चांदनी कैसीहै· चकोरके चुंबनमों अरु अग्रभागनमें· अमृत चुवतहै· कामदेवकी सहायनीहै· कुशमनकेमध्य अपनी करनको प्रचार कस्योहै· पुनः कैसीहै· कुलंगनानहूकी जोमरजादा वाकों दूरकरनहारीहै· चकईके· करुना वचन सुनवेको साषीभूतहै· अरु अपना प्रभाव करिके संपूर्ण दिसाकों व्याप्त करीहै· ऐसी चांदनी मैं· काहू कामीके संग अभिलाषा करिके अपने घरसों या·

संकेतकौं गई॰ तब वह कामीपायोनहीं॰ तब संपूरण व॰
नमें कुंज कुंज वृक्ष वृक्षके तरे वाकौं देषनलगी॰ जहांका
हू कोशब्द सुनें ताद्दिशानकौं दौरि चकई के वचन सुनिसु॰
नि अपने मित्रके वचन जानिके संपूरण सरोवरजे हे ते वा
जहां तहां फिरनलगी॰ तहांतें निरास होइके काहू वृक्ष
केतरे एक मृग सोयो हतो तिनकौं मित्रकी बुद्धिकरि टंटो
लकेजगायो॰ तहांतें फिर निरास होयके आगेचली॰ सो॰
कहां वृक्षके काष्टको मित्रजानिके आलिंगनकस्यो॰ ए॰
सी कामांधभई अरु वनमें अपनो मित्र मिल्यो नही तब
ऐसे पुकारन लगीकि हेकांत हेगुननिधान हेचैतन्य नाय
क हेमनोहर हेसौभाग्यकेभाग्यचंद्र, हेलावण्यकीनिधे
हे पूर्णचंद्रवदन, हेसरोज वदन, हेविशालनेत्र हेविश्राम
के कल्प वृक्ष हमारे नेत्रकों आनंद देतहैं ऐसो तुह्मारो मु
षचंद्र कहांहै॰ हेनाथ आप मोपर कृपाकरके मोकों दर्श॰
नदेहु॰ ऐसें अनेक वचन करिके सबही वनमें फिरनल
गी॰ तबयाकी वानी सुनिके कोऊएक सोवत वनमें सिंघ
जाग्यो॰ अरु वहांसें उठकर घुरघुर शब्द करन लग्यो॰ अ
रु क्रोध करिके प्रतिदिस देषन लग्यो॰ अरु अपने शब्द
करिके सबदिशानकौं व्याप्त करी॰ फिर हाथ पटिक पूंछ
उठाइ के यादिसाकौं दौस्यो॰ तब यह अभिसारिका का
मांध होगईथी॰ उनकेजोरसें या व्याघ्रकों अपनो पति
जानिके अरु हर्षमान होइके याके निकट आई॰ तब व्या
घ्र याकौं अपने नषन करि विदीर्ण करनलग्यो॰ तब या
नें मित्रकी भ्रांति छांडके याव्याघ्रसों कहनलगी॰ हे व्या॰
घ्र मोकोतूं काहेतें मारतहै॰ याको विचार मोकों कह॰ अ

रुतापीछे मेरो भक्षन करु तब वह व्याघ्र इनके वचन सुनि
के एक क्षण क्रोध छांडिकें विदिर्णतें रहित होयकें हसि
कें यासों कहन लग्यो हे अभिसारिका दक्षिण देशामें ए
क मलापहा नाम नदी है ताकेतीर मुनिपर्णा नाम नगरीहै
तहां पंचलिंग ऐसे नामकर सदाशिव विराजतहै तानग
रीमें मैं ब्राह्मनको पुत्रहतो॰ सोमै जग्य करवे जोग्य नहीं
तातें मैं जग्य करा नाम नदीकेतीर जाय वहां प्रतिग्रह ले
तु रह्यो॰ अरु वेद वेंचके धन लेतरह्यो और भिक्षुनको दु
र्वचन कहिके तरजना करतु रह्यो अरु औरहू लोकनसों
छल कपट करिकें दुष्ट प्रतिग्रह लेत रह्यो तब ऐसे करत
करत वृद्ध भयो॰ तब चलवेकी शक्ति नहीं तोहू दर्भ लेकें
जैसे तैसे करके प्रतिग्रह लेवेकों तहां नदीके तीर जातु
रह्यो॰ धनके लोभ कोऊ ग्रहन पर्व होइ तहां जाऊ॰ तब ए
कदिना कहू प्रतिग्रह निमित्त काहू धूर्तके घर चल्यो॰ -
बीच कहूं कूकरनें काट्यो॰ तब मूर्छित होयकें पृथ्वीमें॰
गिरयो॰ ऐसो करत करत बहुत दुःखपायकें मरण भयो॰
तब प्राणगयेतें पीछे व्याघ्र भयो॰ सो मैं यावनके बीचर
हतहों॰ अरु अपनो मोकों सब पापको स्मरन होतहै॰ अ
पने पापकरकें मैं अनेक नरक भोगकरयो॰ अबमैं याठौ
र धर्मात्मा साधु होयकर रहत हो॰ पतिव्रतास्त्री साधुसं
तनकों कबहू भक्षन नकरों॰ अरु जे पापी दुराचारी, व्य
भिचारीस्त्री होयतो तिनकों भक्षन करतहों॰ तातें तूं दु
ष्ट है इसकारन तेरो भक्षन करतहूं॰ ऐसो कहके याकों॰
नषतें बिदीर्णकरकें याजारनी स्त्रीको मांस भक्षन करयो
तब मरन प्राप्त भई॰ तब याजारणी स्त्रीकों यमकिंकर वां

धिकें यमलोक लेगये॰ तहांयमकी आग्या पाइकें नरकभो
गकराये॰ तब या विपत्तिसों छूटिकें फिर पृथ्वीमें आय
कें चंडालिन भई॰ फिर जन्मांतरके पापतें कुष्ट क्षयरोग॰
अरु नेत्रपीड़ा यारोग करिकें जुक्त भई॰ सोया काहूदिना
भवानीके मंदिर निकट गई॰ तहा एक शांति होंती रागअ
रु द्वेष करिकेंरहित परम पवित्र विष्णु भक्त परम दयाल
परमेश्वरके ध्यानमें लीन ऐसे वासुदेव नामा ब्राह्मन देष्यो
सो वह गीताके त्रयोदश अध्यायकी आवर्तन नित्य करें
यह ब्राह्मनको मैं दूरसे देष ठाढीभई॰ अरु इनकों त्रयो
दश अध्यायको पाठ सुनने लगी॰ यह ब्राह्मनका पाठसु
नकें चंडालयोनितें छूटी॰ अरु दिव्यदेह होयकें स्वर्गको
प्राप्त भई॰ हे पार्वती गीताके त्रयोदश अध्यायकी महि॰
मा ऐसीहैं॰ जो इनके पाठश्रवन करें॰ सो कबही मोक्षग
येविना रहैं नही॰ ॥१३॥ ॥दोहा॥ ॥यहत्र॰
योदशअध्यायमें वरन्यो कथाविधान॥ कहींतरमाअध्या
यकी महिमा सिंधुसमान॥१॥ प्रथम तुंगभद्रानदी पु
रहरिहरतिहतीर॥ हरिहर रूप सदा रहे तहांकृष्णबल
वीर॥२॥ पुन्य ताही पुरमें कल्यो हरिदीक्षतद्विजनाम॥
दुराचारिताकीत्रिया छिननरहतद्विजवाम॥३॥ बहुर
दुराचारींवरत कल्योसकलविधगाइ॥ ऋतुवसंतनरुनैल
सित नरढूंढेवनजाइ॥४॥ वनविहारसबविधकल्यो॰
अरुविलापकेबेन॥ सुननदुराचारेबचन उठ्योव्याघ्रदु
खदेन॥५॥ तबैदुराचारिहिकल्यो सुन्योव्याघ्रकिहहेत॥
मारतहोअपराधविनु मोहक्योनकहदेत॥६॥ तबैव्या
घ्रअपनीकथा याकोंकहोविचार॥ बहुरिदुराचारनउदर

मारीनषसों विदार॥ तबैजातनानरककी तिहिंपाईतत-
काल॥ कर्मभोगकरिकेभई अधमयोनिचंडाल॥ ८॥
तहांनेत्रपीडाभई तनकुष्टीक्षयरोग॥ कहूभवानीकेभव
न गईदैवसजोग॥ ९॥ वासुदेवद्विजनितपढै तहांतेर
मोध्याय॥ सुनतदेहचंडालकी तजीमुक्तिपदपाइ॥
१०॥ कहीतेरमाध्यायकी महिमाबहुतअपार॥ सोई-
आनंदरामनै भाषाकरीसमार॥ ११॥ ॥ इतिश्री
पद्मपुराणेउत्तरखंडेश्रीउमामहेश्वरसंवादेगीतामाहा
त्म्येत्रयोदशोऽध्यायः॥ १३॥ ॥ ॥

## अथगीतामाहात्म्यचतुर्दशोध्यायमूलप्रा॰

श्रीगणेशायनमः॥ ॥शिवउवाच॥ ॥ अतःप
रंप्रवक्ष्यामिभवानिभवमुक्तये॥ गीतायाश्चतुर्दशाध्या
यमवधारयसादरम्॥ १॥ मेदिन्यामस्तिविपुलंकि
लकाश्मीरमंडलम्॥ राजधानीसरस्वत्याभगवत्या-
मनोहरा॥ २॥ यामधिष्ठायवाग्देवीब्रह्मलोकंप्रय
च्छति॥ हंसैःसमुह्यमानापिसाविन्नैःप्रहितैरपि॥
३॥ सरस्वतीपदांभोजसेवामाश्रित्यकुंकुमैः॥ गौ-
रीकुर्वंतियत्राशाहंसाःपक्षपुटोद्धतैः॥ ४॥ निरंतरं
तयायत्रनृणांसंस्कृतभाषणाम्॥ स्फुर्वणांस्त्रिय-
भाषाणिमिषेणोपलभ्यते॥ ५॥ प्रातर्गृहांगणोद्धू
तैर्यत्रकुंकुमपांसुभिः॥ सर्वदारुणितच्छायंसशांक
रविमंडलम्॥ ६॥ तत्रासीत्तेजसांराशिःशौर्यवर्मान-
रेश्वरः॥ उद्यदुज्ज्वलबाणौघखंडितारातिमंडलः॥
७॥ अभूच्चसिंहलद्वीपेराजासिंहपराक्रमः॥ नाम्ना

विक्रमवैतालः कलानामपिशेवधिः ॥ ८ ॥ उभौपरस्प
रंमैत्रींवर्धयांचक्रतुः क्रमात् ॥ तत्तद्देशसमुत्पन्नैरभू
र्वैर्वस्तुभिः सदा ॥ ९ ॥ एकदाप्राहितंप्रेम्णाप्रभूतशौ
र्यवर्मणा ॥ माणिकुंकुमकस्तूरीशकुनकीयुगलान्वितं
॥ १० ॥ रांकववस्त्रजातंचस्वदेशोद्भूतमुत्तमम् ॥ रा
जाविक्रमवैतालोविलोक्यशकुनकीद्वयम् ॥ ११ ॥ अ
तीवहृष्टोमित्रायप्रभूतंशौर्यवर्मणे ॥ प्रेषयामासकौ
तुकादुपायनमनुत्तमम् ॥ १२ ॥ मत्तमातंगतुरगमणि
भूषणचामरान् ॥ एलालवंगकर्पूरांश्चंदनानाकद्रव
कान् ॥ १३ ॥ एकदाशिबिकारूढंचारुचामरवीजितं
॥ स्वर्णशृंखलाबद्धंवाद्यडिंडिमडंबरम् ॥ १४ ॥ शकु
नीयुगलमादायमृगयाकौतुकोत्सुकः ॥ राजाविक्रम
वैतालः समंराजकुमारकैः ॥ १५ ॥ वनंजगाममगहनं
मृगयूथसमाकुलम् ॥ पणबंधविधानेनसमुद्यतश
शामिषः ॥ १६ ॥ तत्रराजकुमाराणामभूत्कोलाहलो
महान् ॥ सिंहलेशमहीपेनशशामिषकृतेतदा ॥ १७
॥ ततः समानवयसाकेनचिद्राजसूनुना ॥ बद्धमू
ल्यंपणंकृत्वाराजाचिक्रीडकौतुकी ॥ १८ ॥ ततोव
तीर्यदोलायाविरुदावलिगर्वितम् ॥ धावतः शशकस्यो
च्चैः पृष्ठेमुंचन्नृपः शकुनिम् ॥ १९ ॥ मुमोचराजपुत्रोपिप्रे
मपात्रंमहीभुजः ॥ स्वकीयांशकुनकीमुच्चैः संकीर्त्यविरुदा
वलिम् ॥ २० ॥ आलक्ष्यमाणवेगेस्मिन्शकुनीयुगलके
भृशम् ॥ धावत्युच्छ्रितमेवासीत्पश्यतांगोचरंरजः ॥ २१
॥ पलायन्नतिवेगेनगर्तकोणेप्रमादसौ ॥ पतितोपिशु
नीवस्योनाभूच्छशकशावकः ॥ २२ ॥ ततः शनैः समुत्था

यधावन्नाक्रम्यरोषतः॥ जगृहेराजशकन्यासौशशकःफे
नमुद्वमन्॥ २३॥ ततः कथंचिदुत्पत्यगतवान्स्वबलंद्रु
तम्॥ राजपुत्रशकनक्यासौगृहीतः कंधरातटे॥ २४॥
जितमस्माभिरत्यर्थमितिसंजल्पतांनृणाम्॥ कोला-
हलाच्छंकितायाःशकन्यानिर्गतवान्मुखात्॥ २५॥ त
तोदष्टाद्व्रणश्रेणीक्षरद्रुधिरसंततिः॥ क्वापिगह्वरभूभा
गेन्यलीयच्छशावकः॥ २६॥ जिघ्रंत्याराजशकन्यापि
भूभागंघनरोषया॥ दृष्टमात्रःपरित्रस्तोहस्तमात्रंततो
गमत्॥ २७॥ ततोपिदृष्टमात्रस्कहस्तमात्रमपासर-
त्॥ यत्रकर्पूरकदलीपत्रनिष्यंदशीतलः॥ २८॥ उद्भि
न्नकेतकीकोशरजोमुकुलितेक्षणः॥ विश्रब्धाहरिणा
यत्रछायायांसुखमासते॥ २९॥ नारिकेलफलैर्यत्र-
स्वयंनिपतितैरधः॥ अपिचूतफलैःपक्वैस्तृप्ताःशाखा
मृगाअपि॥ ३०॥ अपिकेसरिणोयत्रखेलंतिकलभैः
समम्॥ फणिनःकेकिबर्हेषुनिर्विशंकंविशंतिच॥ ३१
॥ शिखंडिनःशिखंडिन्यानृत्यंयत्रवितन्वते॥ गोव्या-
घ्रमेकदेशस्थमंभःपिबतिसादरम्॥ ३२॥ अहोकिंब-
हुनोक्तेनपशवोपिनिरंतरम्॥ विहायशाश्वतंवैरंसु-
खंयत्रावतस्थिरे॥ ३३॥ तत्राश्रमांतेवैविप्रोवत्सना-
माजितेंद्रियः॥ चतुर्दशममध्यायंजपन्नास्तेनिरंतरं
॥ ३४॥ तत्रतच्छिष्यपादाब्जप्रक्षालनजलैःकृते॥
कर्दमेन्यपतद्भ्रांत्वाजीवशेषोमुहुःश्वसन्॥ ३५॥ तत
स्तत्कर्दमस्पर्शमात्रनिस्तीर्णसंस्थितिः॥ दिव्यंविमा
नमारुह्यनिर्ययौशशकोदिवम्॥ ३६॥ ततःशकन्य
पिलिमागास्तोकैःकर्दमबिंदुभिः॥ क्षुत्पिपासार्दि

